Tanjore Sarasvati Mahal Series No. 198.

# SĀHAVILĀSA GĪTAM

*By*

DUṆḌI VYĀSA.

महाकविढुण्ढिव्यासप्रणीतं

# ॥ शाहविलासगीतम् ॥





Tanjore Maharaja Serfoji's
Sarasvati Mahal Library, Thanjavur.



1985] [Price Rs. Rs. 12

Tanjore Sarasvati Mahal Series No. 198.

# SĀHAVILĀSA GĪTAM

*By*

DUṆḌI VYĀSA.

*

*Edited By*

Dr. S. RAMANATHAN,
PRINCIPAL (Retd.),
Sadguru Saṅgita Samajam Music College,
Madurai - 2.

AND



Valuthur Sri RAJAGOPALA SARMA.

TANJORE MAHARAJA SERFOJI'S
SARASVATI MAHAL LIBRARY, THANJAVUR.

*

1985 ] [ Price : Rs. 3—50





**First Edition : — 1985.**

*Published by :*

TANJORE MAHARAJA SERFOJI'S
SARASVATI MAHAL LIBRARY, THANJAVUR.

**Published with the financial assistance from the Ministry of Education and Social Welfare, Govt. of India.**

*Printed at*

T. M. S. S. M. LIBRARY PRESS, THANJAVUR.

महाकविढुण्ढिव्यासप्रणीतं

# ॥ शाहविलासगीतम् ॥



संङ्गीतविद्वान्

डाक्टर् एस्. रामनाथेन

संशोध्य प्रकाशितः ॥

तथा



वलुत्तूर् श्री राजगोपाल शर्मणा च

संशोध्य सम्पादितं ॥

प्रकाशकः-

तञ्जावूर् महाराजाशरभोजी सरस्वतीमहालय ग्रन्थालयेन

प्रकाशितं विजयतेतमाम्



१९८५] [रु. ३-५०

# PREFACE.

This Sanskrit publication presents to the public an interesting work "SAHAVILASA GITAM" on the model of Gita Govinda, praising Sahaji, one of the Maratha Rajas of Tanjore (A. D. 1684 — 1710). He is called Abhinava Bhoja. The Library has already published Gita Govinda of Jayadeva with notes on Abhinaya for every word of the Slokas and the Ashtapadis (upto 17th Astapadi) in the year 1950. Now we are publishing this work with the available two copies of Sahavilasa Gitam from our manuscripts section (D. Nos. 10957 and 10958)

Dr S. Ramanathan, an eminent musician and international scholar and

Valuthur Sri Rajagopala Sarma have edited this work with all their profoundity. They deserve our appreciation for editing this fine work.

Government of India have to be thanked for their recurring grant for publishing rare collections of manuscripts.

T. R. RAMASWAMY, I. A. S.,
Collector and Director,
T. M. S. S. M. Library.

Thanjavur,
21--4--85.

* * *

# INTRODUCTION

**Gita Govindam and Sahavilasa Gitam :**

Jayadeva's immortal poem, "Gita Govindam" which was written in the 12th century A. D. has had such a profound influence on later poets that to this day. There have been more than sixty works based on its model. "Sahavilasa Gitam" of Dundi Kavi is one such work.

**Author of Saha Vilasa Gitam :**

In the colophon, the author says that he is the son of Lakshmana Dikshitar, that he belongs to the Vyasa kula and that he is the Pauranika in the Court of King of Sahaji. He calls himself "Abinava Jayadeva."

**The hero of the work :**

Just as in the Gita Govinda there are three characters Krishna, Radha and her maid, in the Sahavilasa Gitam also there are the King Sahaji. Leelavati and her maid.

Sahaji was the second in the line of Maharatta Kings who ruled over Tanjore after the Telugu speaking Naiks. He was related to Shivaji and beloned to the Bhosla dynasty. He ruled over Tanjore from 1686 to 1712. He was proficient in several languages like Telugu, Sanskrit, Marathi, Persian etc. He was also well trained in the fine arts like music and drama.

He was a devotee of Tyagesar, the deity at Tiruvarur, and has to his credit a number of padas in praise of the deity. His Pallaki Seva Prabandham has been

acclaimed as a worthy contribution to Karnatic Music. His collection of raga lakshanas has great musicological value.

His court was adorned by many poets and musicians Tamil composers like Ramakavi and Vasudeva Kav were patronised by him. Dundi Kavi pays handsome tribute to his patron for his munificence.

Sahendra Vilasa of Sridhara Ayyaval and Sringara Manjari Sahajiyam of Periappa Kavi eulogise the many gifts of the ruler

The work consists of eight sargas (as against 12 in Gita Govinda) and 24 ashtapadis. An ashtapati, as its name indicates in a song with eight caranas and a dhruva pada, the counterpart of the modern Pallavi.

The work begins with a few poems in praise of deities like, Devi, Nataraja, Ardhanari. There are a few slokas eulogising the glory of Sahaji.

Story: There is not much of a story here. Leelavathi, a courtesan, falls in love with Sahaji and expresses her love to her maid who brings about their union. After a bout of conjugal bliss, Leelavati finds some fault with the King and leaves him. The King raves in despair and implore the maid to bring about a reconciliation. The maid persuades Leelavati to pardon the king and a re-union takes place.

The ten avatars of Vishnu, figuring as the first Ashtapadi in Gita Govindam is relegated to the end in Sahavilasa Gitam. The work ends with a prayer to Krishna to bestow his blessings on King Sahaji.

**Dr. S. Ramanathan.**

***

॥ श्रीराम ॥

॥ श्रीगणेशाय नमः ॥

॥ रेणुकायै नमः ॥

# ॥ श्री शाहविलास गीतम् ॥

## ॥ नटराजस्तुतिः ॥

नाटचाटोपरयोच्चलत्सुरसरित्पाथः पृषंत्युत्किर-

न्नुच्चैर्डामरवैरवैर्दश दिशश्चात्यन्तमुद्घोषयन् ।

चञ्चत्पीतरूचिच्छटापटुजटाजूटं शिरश्चालय-

न्बिभ्राणः करिकृत्तिमंवुदनिभस्त्वां पातु सायं नटः ॥ १ ॥

## ॥ देवीस्तुतिः ॥

सरोजं चेद्भ्रूमः सममिति जलावासि किल तत्

प्रवालो चेदेकः प्रकृतिकठिनोऽन्यविटचजः ।

अतो विद्वद्वन्द्यं सदवनपरं किंच मृदुलं

जगन्मातुः पायाच्चरणयुगलं तन्निरुपमम् ॥ २ ॥

## ॥ गणेशस्तुतिः ॥

मदोत्कटकटभ्रमद्भ्रमरपक्षविक्षेपजा-
निलप्रमुदितस्फुरत्फणिफणामणिज्योतिषा ।
घनीभवदनेकपाकृतिमुखे सखे चिन्तय
प्रवालदलमञ्जुलं किमपि तुंदिलं तन्महः ॥ ३ ॥

## ॥ अर्धनारीश्वरस्तुतिः ॥

क्वचिन्मुक्तादामोल्लसदुरुतरश्यामलकुचं
क्वचित्कापालस्रक्परिकलितवक्षःपरिसरम् ।
क्वचित्ताटङ्कार्चिःशबलितकपोलं फणिमणि-
स्फुरद्गल्लं क्वापि स्फुरतु हृदि मे किंचन महः ॥ ४ ॥

## ॥ शाहजीस्तुतिः ॥

अस्ति प्रशस्तविभावो भुवि भोसलेन्दु-
र्भूपालमौलिमणिराजिविराजिताङ्घ्रिः ।
श्रीशाहवर्मनृपतिर्विधिपार्वतीश-
श्रीशाहविर्यदुपक्लृप्तमुशन्ति नित्यम् ॥ ५ ॥

## ॥ शाहजीराजवर्णनं ॥

उदितो य एक धरणीभृदुत्तमा-
दुदयदिवाम्बरमणिर्विराजते ।
कमलानुरञ्जनकरस्तिरोदध-
न्निजतेजसा सकलराजमण्डलम् ॥ ६ ॥

## ॥ यशोवर्णनं ॥

सामन्तक्षितिपालमौलिविलसन्माणिक्यमंजुप्रभा-
चंचन्मंजरिपुंजरञ्जितपदा तञ्जापुराध्यासिना ।
तन्वानेन चतुष्पदःस्थितिमहो धर्मस्य चोलावनौ
भूयोऽनेन कृतं कृतं युगमिति प्रस्तूयते यद्यशः ॥ ७ ॥

मन्ये रूप्यसुवर्णरत्नगिरयःश्वैत्याद्ययापादिना
यस्योच्चैर्यशसा तिरस्कृतिमपि स्वीयां बहुं मन्वते ।
यत्ताद्दक्षतुलादिकर्मणि यदा ज्ञातैर्मटैरुद्भटैः
खण्डं खण्डमिमे विधाय न महीदेवव्रजत्राकृताः ॥ ८ ॥

## ॥ औदार्यवर्णनं ॥

प्रथितविभवभाजा येन शश्वद्वितीर्णै-
रमितधनसुवर्णैस्तुष्टपुष्टार्थिसार्थाम् ।
भुवममरग(ज)वीगा वीक्षितुं लज्जमाना
कलयति किमजस्रोत्तानसंचारमभ्रे ॥ ९ ॥

## ॥ दानवर्णनं ॥

कल्पद्रुर्विटपाश्रितः स तु मणिश्चिन्ताविधेयः पुनः
काठिन्यास्पदमाननं विवृणुते तोत्तानगा सा च गौः ।
आतः साधुजनावितारममिताभीष्टार्थविश्राणनं
कारुण्यालयमाश्रयन्ति विबुधाः शश्वद्यमेव श्रिये ॥ १० ॥

## ।। कारुण्यवर्णनं ।।

यस्योद्यत्तरतादृगुज्वलयशःश्रेणीसुधापूरणै-
विश्वस्मिन्विशदीकृतेन स हरो रूप्याचलं द्रागवैत् ।
यच्चित्ते विमले सदैव वसतिं धत्ते दयाकोमले
तस्मादेष विशेषतः स जयति श्रीशाहपृथ्वीपतिः ।। ११ ।।

## ।। शौर्यवर्णनं ।।

यदा धत्ते वृद्धिं समिति शरधारासु सततं
स्थितं लोकालोकात्परमपि तमो यत्क्षपयति ।
यदत्यन्तं रात्रिंदिवमुदयते लोकमहितं
तदेतद्यत्तेजो जगति नवितुं कः प्रभवति ।। १२ ।।

## ।। शौर्यसोत्प्रेक्षा ।।

नैवासावरिदुःसहत्वमयते रात्रिन्दिवं नैधते
शाहक्ष्मापतितेजसा बत पुनर्व्यर्थं कुतः स्पर्धते ।
इत्यारूढरुषा सरोजजनुषा यस्य प्रतापोपरि
भ्रामं भ्राममयं रविःकिमुदधौ सायं मुहुःक्षिप्यते ।। १३ ।।

## ।। तेजोवर्णनं ।।

दिक्चक्रं सततं विकासमयते येनोद्यता सर्वतः
पद्मानन्दकरेण याति सकलं तद्राजतेजोलयम् ।
तस्मिन्यस्य सदोदिते भुजमहस्तिग्मद्युतौ जाग्रति
भ्राम्यत्येष वृथा रविस्तमथवा नीराजयन्भ्राम्यतु ।। १५ ।।

## ॥ प्रताप ॥

यस्यात्तापप्रतापज्वलनविसृमरज्वालमालाभिजात-
क्वाथः क्षीराम्बुनाथः कथमपि सहसोद्धृत्य रिक्तोभविष्यत् ।
यद्यस्मिन्नेतदीयाद्भुततरविकसद्दानवारापगानां
पूरादूरादुदीर्णाः प्रतिदिवसमहो रंहसा नापतिष्यन् ॥ १५ ॥

## ॥ अश्वसेना ॥

यस्यत्वङ्गत्तुरङ्गक्षुरपुटनिकरक्षुण्णभूमी समुद्य-
द्धूलीपङ्काङ्कितद्योसरिति वियदिदं नीलमित्याशयो नः ।
किंचोदञ्चच्छरौघाहतिदलदसुहृत्कुंभिकुंभाग्रमुक्ता-
मुक्तास्तत्रावसक्ता विदधति वियति स्फारतारप्रतीतिम् ॥ १६ ॥

## ॥ अश्वः ॥

यस्यात्युद्भटघोटनिष्ठुरखुरक्षुण्णक्षमाधूलिभि-
र्भास्वद्वाजितिरोहतिः सुमहते जातोपकाराय नः ।
नामीभिः परथा घटेत रभसत्वंगत्तुरङ्गक्रमा -
लोकक्रीडजडैः पुरेव सवितुर्दैनंदिनः प्रक्रमः ॥ १७ ॥

## ॥ गजः ॥

यद्दन्तावलकर्णतालपवनैरुद्दामभिः द्रागसा-
वुड्डीयक्वचनापि तूलपटलीरीत्या मही यास्यति ।
इत्याशङ्कितमानसेन विधिना जानीमहे सर्वत-
स्तद्गाढस्थितये पुरा तदुपरि न्यस्तास्समस्ता नगाः ॥ १८ ॥

## ॥ धर्मः ॥

आचन्द्रार्कमवापि रामनृपतिस्त्राणादपारं यशः
प्राज्यं राज्यमुपार्जितं प्रतिभटाः सर्वे हटान्न्यक्कृताः ।
व्याघ्राघ्रातमृगोपमं नरवराधीशं द्विषद्वारिधे-
र्येनोद्धृत्य सुरक्षिता च विहिता सा धर्मकोटिः परा ॥ १९ ॥

## ॥ सुराजः ॥

नित्यं वर्षति वासवो जनपदानामोदयंनुर्वरां
कावेरीसलिलैश्च चोलधरणिः स्वैरं समाप्यायते ।
मोदन्ते निखिलाः प्रजाः प्रशमिताशेषोपसर्गाः सदा
यस्मिन्शासति भोसलान्वयमणौ भूर्भाति राजन्वती ॥ २० ॥

## ॥ राजवर्णनं ॥

क्षात्रं तेजः किमिदमवनीरक्षणे जागरूकं
यद्वा मूर्तः प्रशमनविधिः ब्रह्मविद्द्वेषभाजाम् ।
उत्साहः किं तनुमनुगतः पुण्यराशिः किमेक-
क्षोणीशेन्दोः परिणत इति श्रेणयोऽयं नुवन्ति ॥ २१ ॥

## ॥ राजा ॥

शरणागतवत्सलः सुमित्रानतिमानाजिकृताधिकप्रमोदः ।
नृपतिः खलु दूषणासहिष्णुर्भुवि कोदण्डधरोऽस्ति येन तुल्यः ॥ २२

## ॥ राजाज्ञा ॥

कीर्तिर्यस्य नरीनृतीति महति स्फीता जगन्मण्डपे
मर्माविद्हृदि जाज्वलीति विमतक्ष्मोर्णांभुजां यन्महः ।
तेनोर्वीपतिवर्यशाहविभुना व्यासान्वयेन्दुः स्विकां
लीलां वर्णयितुं न्यदेशि सदसि श्रीधुण्डिराजः सुधीः ॥ २३ ॥

## ॥ कविप्रतिज्ञा ॥

विधीयते व्याकरणे पुराणेष्वधीतिना शाहनृपाश्रितेन ।
तत्प्रेमधाम्ना किल धुण्डिनाम्ना मनोहरं शाहविलासगीतम् ॥ २४ ॥

## ॥ स्वलक्ष्यं ॥

विधृतयवनवेषान्यातुधानानशेषा-
नधिकलिविनिहन्तुं शौरिमेवावतीर्णम् ।
भुवि नरपतिमेनं साधु गायामि गीतै-
रभिनवजयदेवः सोहमेवं प्रणीतैः ॥ २५ ॥

## ॥ विनयप्रदर्शनं ॥

सन्तः परिपुनन्त्येतन्मय्यनुग्रहकारणात् ।
यदि वा शाहराजेन्द्रमहार्हगुणगौरवात् ॥ २६ ॥

**इति धुण्डिव्यासविरचिते शाहविलसगीते**
**उपोद्घातो नाम प्रथमः सर्गः ॥**

## ॥ द्वितीयः सर्गः ॥

दृष्ट्वा मूर्ध्नि स्वःस्रवन्तीं स्फुरन्तीमीर्ष्यावत्या गाढमाश्लिष्टवत्या ।
कालिन्द्येवालङ्कृतो यस्य कण्ठः सोऽयं देवः पातु वो नीलकण्ठः ॥ १ ॥

**श्रितकमलाकुचमण्डलेत्यस्यप्रतिनिधिः**
**ललितरागेण गीयते**

गिरितनयावपुरञ्चित जगदञ्चित धृतभुजगवलयहार ॥ १ ॥
अव शिव शाहविभुम् ॥ ध्रुवम् ॥

मदनतनुभसितचर्चित विबुधार्चित रजतगिरिकृतविहार ॥ २ ॥

प्रणतजनदुरितखण्डन शशिमण्डन मोहितमुनिजनदार ॥ ३ ॥

सचराचरभुवनावनजनपावनहृतसकलावनिभार ॥ ४ ॥

अमितशुभगुणनिकेतन, वृषकेतन, कृतविविधनिगमसार ॥ ५ ॥

अन्धकसुररिपुनाशन, गरलाशन, निटिलनयनजितमार ॥ ६ ॥

निजचरितामृतमज्जनरत सज्जनविहितदुरितपरिहार ॥ ७ ॥

धुण्डिमनःकृतभासन, वृषभासन परिहृतसर्वविकार ॥ ८ ॥

*अर्धाङ्गे गिरिजां वहन्नपि पुनर्यः कामजेतेति वि-
ख्यातो यः श्रितसर्वमङ्गलतनुर्बिभ्रत्कपालान्यपि ।
श्रुत्यन्तैरुपगीयतेऽखिलजगत्कर्ताप्यकर्तेति यः
सोऽयं वाङ्मनसातिवर्तिमहिमा भूयात्तु भूत्यै तव ॥



*विराजत्कोटीरं निटिलतटपाटीरतिलकी-
भवच्चन्द्रोत्तंसं किमपि मुनि संसन्नतपदम् ।
कुचाभ्यामानम्रं पुरविजयिनिष्कम्रं धरणिभृ-
त्कुलस्याहो भाग्यं श्रुतिगणविमृग्यं विजयते ॥

जननि वितर मयि सदयमपाङ्गम् ॥
अमृतवलितमिव भवतु ममाङ्गम् ॥
पाहि मां देवि पाहि माम् ॥ ध्रुवम् ॥ १ ॥

शमलमखिलमपि गमय विभङ्गं
भजतु मनो मम तव पदि सङ्गम् ॥ २ ॥

अंब कदम्बकवनकृतवासे कुरु
ममतामतिमिह मयि दासे ॥ ३ ॥

त्वमवसि न हि यदि गतिरिह का मे
भुवि भविता वद पुरहरवामे ॥ ४ ॥

स्फुरतु सदा मम मनसि पदं ते
हरवधु विरचितनतत्रिपदं ते ॥ ५ ॥

भृशमपवर्णनिदानमिदं तन्नौमि
महस्तव भृनहरिदन्तम् ॥ ६ ॥

तव करुणालवमेव निकामं
परिकलये न तु कंचन कामम् ॥ ७ ॥

शाहनुत शशिभूषितमस्ते
व्यासवरान्वयदैव नमस्ते ॥ ८ ॥

*अंबा कारुण्यकल्लोलमालिनी मृडमानिनी ।
मन्मानसचरी हंसी भूयात् त्रिभुवनेश्वरी ॥

—•—

*सौधोत्सङ्गे विहरणपरा राजमार्गेण यातं
शाहक्षोणीपरिबृढमुपारूढरिङ्खत्तुरङ्गम् ।
बाला काचिन्मणिगणमयोष्णीषपट्टाभिरामं
कामं कामाकृतिमिव मुदा वीक्ष्य कामातुरा भूत् ॥

कामक्षामा विरहशयनव्यस्तविन्यस्तगात्री
धात्रीमाह प्रतिपदमुरुश्वासवल्गत्कुचा सा ।
लावण्यश्रीजितमनसिजे शाहराजेऽनुरक्तां
कामः कामं कुसुमविशिखैर्हन्त दन्दह्यते माम् ॥ १ ॥

तद्रूपं यदि सुन्दरं पुरभिदा दग्धेन कामेन किं
सा कान्तिर्यदि कोमला बत कृतं रूक्षैः सुवर्णादिभिः ।
तद्वक्त्रं यदि निष्कलङ्कमधुरं किं तेन शीतांशुना
सृष्टिः किं बहुना विधातुरपरा सा कापि लोकोत्तरा ॥ २ ॥

तेनावनीपरिवृढेन नितान्तमेत-
दाकृष्टमान्तरमतित्रपसस्तधैर्यम् ।
उन्माद्यति भ्रमति मुह्यति तापमञ्च
त्याघूर्णते विवलते भजते विषादम् ॥ ३ ॥

सोऽयं यथा मम महीरमणोदये
तन्मातर्विलम्बमपहाय तथा यतेथाः ।
निर्दग्धपान्थ वनितागहने मुधा मां
कन्दर्पबाणदहनेन समर्पयेथाः ॥ ४ ॥

इति सा प्रहितानङ्गक्लान्तया कान्तया तया ।
मिथः शाहमहाराजमाह सप्रश्रयं वचः ॥ ५ ॥

अस्त्यत्र काचित्कुटिलालकान्ता
लावण्यलीलाजितकामकान्ता ।
लीलावती नाम मनोज्ञरूपा
कुबेरदत्तस्य सुताभिरूपा ॥ ६ ॥

शरीरिणी शम्बरशासनस्य जगद्विजेतुः प्रभुशक्तिरेषा ।
लावण्यशीलश्रुतवृत्तवेषादिभिस्तव प्रेम भजेत एषा ॥ ७ ॥

सैषा कदाचन नराधिपराजवीथीमार्गेण यान्तमनुवीक्ष्य मुदा भवन्तम् ।
शेते प्रवालशयने नयनेऽपि धत्ते रम्याणि वीक्ष्य सखीवचनेन धत्ते ॥ ८ ॥



## निन्दति चन्दनमिन्दुकिरणमित्यस्य प्रतिनिधः
## (कानडारागः)

सा सततं त्वयि लोला नृप सा सततं त्वयि लोला ।
मारविशिखततिहतिविकला दिनदूनसुधांशुकपोला ॥ ध्रुवं ॥

मम निरुपमरुचिहारिणि शाहनि भूभुजि किं रभसेति ।
अहरहरहह निहन्यत आत्तरूषा तनुना सहसेति ॥ १ ॥

मलयजरसमपि वपुषि निरीक्ष्य भयादनलास्रमानम् ।
तदुपशमनमिव नयनजलैस्तनुते वरुणास्त्रसयानम् ॥ २ ॥

मलयपवनमथ मनसिजहेतिरितिप्रतिपद्य इति (त्रि) शंक्य करालम् ।
कलयति निजहृदि बत सततं भुजगास्त्रधियेव मृणालम् ॥ ३ ॥

भ्रमरनिकरमनु किंच विधाय रतीशघनास्रविकल्पम् ।
अहह विमुञ्चति निश्वसिताकृति किमु पवनास्त्रमनल्पम् ॥ ४ ॥

कोमलकिसलयचयमनुवेलमनङ्गहुताशनकीलम् ।
हृदि परिभाव्य ससंभ्रममाशु च हा कुरुतेऽक्षिनिमीलम् ॥ ५ ॥

मदनकदनमितिवोढुं हो न सहातिविगाढमनूढा ।
त्वामेव शरणमुपैति धृतं हृदि मननमिषेण विमूढा ॥ ६ ॥

त्वामियमुल्बणमोहवशेन दिशा सुनिरीक्ष्य निकामम् ।
प्रणमति सरभसमुन्नतभुजमुपगूहितुमेति सकामम् ॥ ७ ॥

मदनविधुरललनामणिनोदिततदूतितमागदितानि ।
विदधतु शाहमहीपतिसंपदमिति बुधधुण्डिकृतानि ॥ ८ ॥

*याला ध्यानलयेन साऽथ पुरतः पश्चात्समन्तादपि
त्वां शाहक्षितिपाल वीक्ष्य रभसादुत्थाय बद्धाञ्जलिः ।
किंचिद्विश्लिथनीविगाढपुलकोद्भेदस्फुटत्कञ्चुकं
प्रस्विन्नस्फुरदूरुगद्गदगलं मोहादिदं भाषते ॥

---

## याहि माधव याहि केशव इत्यस्य प्रतिनिधिः
## (मल्लारिरागः)

एहि सादरमेहि भूवर देहि दयामृतसारम् ।
गाढनिपीडितपीनकुचं परिरभ्य रसादनुवारम् ॥ ध्रुवम् ॥

किमिव करोमि मनोहरवेष विशेषविजृम्भितवैरे ।
विदहति संप्रति पुष्पशरैरपि कीलभरैरिव मारे ॥ १ ॥

दिशि दिशि विकरति मर्मरचूर्णमिवेह वसन्तसमीरे ।
सरसिजरेणुचयं बहु तापमुपैमि विधूतपटीरे ॥ २ ॥

विधुरथ निशि निशि विधुरतरामपि मामपि हन्ति मयूखैः ।
कुचतटसीमनि शाहविभो मम परिलिख निजनखलेखैः ॥ ३ ॥

करधूनकचभरमुन्नमिताननमाशुपिबाधरबिम्बम् ।
तव विरहोऽन्धयतीव दिशो मम न खलु सहेय विलम्बम् ॥ ४ ॥

दलति हृदयमथ विगलति धृतिरपि भृशमवसीदति गात्रम् ।
करसरसिजमिदमधिकुचयुगमिह परिकलय क्षणमात्रम् ॥ ५ ॥

हरसि मनो मम सरसिजलोचन रुचिजितमनसिजदेह ।
नृपवर संप्रति किमु शरणं मम-तव चरणेन विनेह ॥ ६ ॥

इति किल मोहवशादनुयाति भवन्तमुदीक्ष्य नितान्तम् ।
हृष्यति विकसति विहसति विलपति किंच विचिन्त्य निशान्तम् ॥ ७ ॥

इति युवतीमणिदूतिगवीमभिनन्द्य स भूपरिणेता ।
अभजत संमदमाश्रितसंमतधुण्डिमनोषितदाता ॥ ८ ॥

*शाहाधिप त्वयि निवेशितचित्तवृत्ति-
स्सैषा वसन्तसमये विरहाधिदूना ।
क्लिष्टा रतीशमलयानिलचन्द्रपादै-
रेनानुपाल बत हन्त सखीसमक्षम् ॥



वदसि यदि किंचिदपि प्रिये चारुशीले अस्यप्रतिनिधि·

(वरालिरागः)

*सखि सुरभिवासरान्कुसुमभर
भासुरान्वद कथमिव सपदि सदेहम् ।
रतिपतिरहर्निशं कुसुमविशिखैः
कृशं भृशमहह तुदति मम देहम् ॥
अहो किंनु कुर्वे ॥

शरणमिह तव पदसरोजं,
शाह नृप मानयेरथतमभि मां नयेः
रूपभरनिर्जितमनोजम् ॥ (ध्रुवपदम्)

बहु दहति विप्रयोगिजनहननोदयो बत सपदि मदनहतकोऽयं ।
मम स दयितो यदा किमपि दयते तदा द्रष्टुमपि माम् (कथय कोऽयम्) ॥२॥

मलयमरुदङ्गना किमियमिति वञ्चनापटुरभिमृशति सखि मुधा माम् ।
अनधिगतरञ्जनां गतधृतिमनङ्गनां हन्त न हि वेद नृपकामाम् ॥ ३ ॥

सेतुकरणे पुरा सखि किमिति वानरावलिरहरदपि न मलयं तम् ।
असति निलयेऽनिशं मलयपवनो भृशं जनयति न दूर्नयमियं तम् ॥ ४ ॥

विधुर यमकारणाद्विरहिजनमारणाद्वहति बहुदुरितमधिलोकम् ।
वीक्ष्य बत कोककुलमखिलमिममाकुलं वाञ्छति हि भास्वदवलोकम् ॥ ५ ॥

हरनिटिलवह्निना विधुरतनुरदाहि नानिशमहह मौलिनिहितैषा ।
जलनिधिगताऽथवा नाशमपि वाडवानलभवन कथमियमशेषा ॥ ६ ॥

सततमनलायते बत शिशिरदीधितेरपि किमु कथय किरणजालम् ।
शिवनयनदीपितं ज्वलनमनु तमपि तं प्रतपति किमिदमतिकरालम् ॥ ७ ॥

दरविकचमालतीसुरभिरिति भारती व्यासकुलनेतुरवदाता ।
कलयतु मुदं पराजितमधुरशर्करा शाहनृपचेतसि सुजाता ॥ ८ ॥



*स त्रिनेत्रकरुणावलोकनासादिताखिलमहोदयः प्रियः ।
अत्रिनेत्रकलितोदयो जडस्तत्तुलां कथमयेदयं विधुः ॥ १ ॥

जयति कान्तमुखं नयनामृतं किरति शोभयते च दिशो दश ।
विरहिमारणपातकमान्तरं स्फुटयितुं त्वमुदेषि मुधा विधो ॥ २ ॥

तव जडात्मक कालविदां गणैः शतभिषग्वरतातु मृषोदिता ।
तव कराधिगमेऽपि कुमुद्वती न हि विमुञ्चति नित्यसरोगताम् ॥ ३ ॥

एकं पुरा परिभवन्हरमस्तमूर्तिः प्राप्तः पिशाच इव कामपि दुर्व्यवस्थाम् ।
निघ्नन्पुनर्विरहिणीगणमेवमार्तं गन्तासि कां गतिमिति स्मर न प्रतीमः ॥ ४ ॥

जगत्प्राणः प्राणान्कथमिव समुन्मूलयसि मे
किमाधत्से वाच्यं जगति विदितो दक्षिण इति ।
प्रभञ्जन्नेवं मां चरसि नितरां मन्दमतिर-
प्यहो सर्वं वृत्तं पवन विपरीतं तव मयि ॥ ५ ॥

इति क्लिश्यति सा भूप त्वयि विन्यस्तमानसा ।
अंजसा दयनीया ते शीलरूपसमञ्जसा ॥ ६ ॥

निरवधि निरुपाधि प्रेम गाढामनूढां
गुरुभिरनुमतां तां कामसन्तापतान्ताम् ।
सपदि समनुगृह्य प्रीतिलक्षैः कटाक्षैः
रहसि रतिविलासैः प्रीणयस्व प्रसीद ॥ ७ ॥

दूतीवाक्यं तदिदमवनीजानिराकर्ण्य सद्यः
प्रोद्यत्प्रेमप्रसरसरसैरञ्चितभ्रूविलासैः ।
तामालोकैः सदयमभिनन्द्याथ संभोगलीलां
लीलीवत्याः प्रमदवनसंकेतितामन्वमंस्त ॥ ८ ॥

इति श्री धुण्डिव्यासविरचिते शाहविलसगीते
दूतीवाक्यं नाम द्वितीयः सर्गः ॥



## ॥ अथ तृतीयः सर्गः ॥

*अथ सुदृशमिमां विबोध्य सख्यः
कथमपि केलिवनं नृपस्य नीत्वा ।
तदनु तदनुवीक्षणेन लज्जा-
निभृतपदामिदमाह सस्मितं सा ॥

**मञ्जुतरकुंजतलकेलिसदने प्रविशराधे माधवसमीपं इत्यस्य-प्रतिनिधिः।**

**(मल्लारिरागः)**

गुंजदलिमंजुतरवंजुलतले
प्रमदवन इह विश मृदुलकरतले ॥ १ ॥

रमय बाले शाहधरणीशम् ॥ ध्रुवं ॥

समदकलकण्ठकुलकृत कलकले
कलय रतिमिह विदितमनसिजकले ॥ २ ॥

मलयभवपवनचलनवकिसलये
भज सुखमिह सखि रणितमणिवलये ॥ ३ ॥

कुसुमशयनोपचितकनकमञ्चे इह
समुपविश करकलितविपञ्चे ॥ ४ ॥

कुङ्कुमकुरङ्गमदपरिमलघने विलस
भृशमिह सुदति विपुलजघने ॥ ५ ॥

चलितनवमल्लिकुसुमललितगन्धे
वह धृतिमिह कृतविविधरतिबन्धे ॥ ६ ॥

संप्रति मधौ सुमुखि शुचिरसमये
कुरु हृदयमभि नृपमतिसर समये ॥ ७ ॥

सुधिय इह दधतु शाहजिसमाजे
मुदमिति निगदति बुधधुण्डिराजे ॥ ८ ॥

*इति सपदि वयस्या बोधयित्वा मुहुस्तां
क्षितिभुजि पुनरस्याः प्रेमसंवर्धनाय ।
गुणगणमदसीयं सादरं व्यक्तुकामा
युवतिमणिमवादीदीदृशं सान्त्वपूर्वम् ॥

---

## रासे हरिमिह विहितविलासं इत्यस्य प्रतिनिधिः ॥

शश्वदुदञ्चित विश्वमनोहर गुणमणिरोहणशैलम् ।
भुवनयुवतिजनमोहनरूप जितस्मरसुरभिषगैलम् ॥ १ ॥

बाले परिचरशाहनृपालं सुललितमृगमदतिलकितभालम् ॥ ध्रुवं ॥

कच्छपपतिफणिपरिवृढदिग्गजभरहरपृथुभुजसारे (रं) ।
जय कमलोन्नतसौधदुरस्थलतोरणदुज्वलहारम् ॥ २ ॥

धैर्यसमुन्नतिखर्वितसर्वसुपर्वनिकेतनगर्वम् ।
हतरिपुपुरमपजितमदनं जगदवितुमुदितमिव शर्वं ॥ ३ ॥

अमितदुरधिगममहितगभीरिमगुल्फमिताखिलसिन्धुम् ।
अवधिधरातिग भुजमहसा भृशमपहसिताम्बुजबन्धुम् ॥ ४ ॥

अधिधरमुन्नत भोंसलवंशसमुद्भवमौक्तिकरत्नम् ।
समरनिरर्गलविपुलभुजार्गलविदलितनिखलसपत्नम् ॥ ५ ॥

विमलयशस्तति चन्द्रिकयानिशविशदितविश्वमतन्द्रम् ।
अपगतलाञ्छनमनहिभयं भुविसततोदितमिवचन्द्रम् ॥ ६ ॥

विबुधमनीषित वितरणकर्मणि सुरभि सुरद्रुमकल्पम् ।
एकमहीपतिसुकृतमधिक्षिति ,परिणतमेवमनल्पम् ॥ ७ ॥

मणिमयमञ्चगतं जगदञ्चितम(मु)पचित भवदनुरागम् ।
.व्यासवरस्तुतगुणगमेनमुदारमुपेहि सरागम् ॥ ८ ॥

*ततश्च

सविस्मयः प्रेमजुषा सचक्षुषा
पिबन्मुहुस्तामथ मन्मथाकुलः ।
त्रपावलीढैरिदमीयविभ्रमै-
रमन्दमानन्दमविन्दत प्रभुः ॥

*नवोढाविस्रम्भाचरणचतुरः केलिविपिने
कमप्यंचन्मंचं मणिमयमुदंचद्रतिरसः ।
रहःक्रीडां व्रीडापरवशतया नानुदधतीं
प्रियामेवं शाहक्षितिपतिवरादीद्वशयितुम् ॥

---

**ललितलवङ्गलतापरिशीलने**-त्यस्यप्रतिनिधिः

कवलितसरसरसालजमञ्जरिपरभृतकलरावम् ।
मलयसमीरसमीरितपान्थवधूजनमनसिजदावम् ॥ १ ॥

सुमुखि सरसमिह विकिरदङ्कतम्
भाति मदनविभवेन भृशं वनमिदमधिगम्य वसन्तम् ॥ ध्रुवम् ॥

विरहिमनःकृतकम्पविकस्वरचम्पकरुचिनिकरेण ।
दिशि दिशि दीपित तमिव मन्मथ भुजमहसः प्रसरेण ॥ २ ॥

प्रसरति वायुवशादुपरिस्थलकमलरजः प्रतिवेलम् ।
मदनविभोः पुरतः समुदंचिततमिव काञ्चनचेलम् ॥ ३ ॥

दरविकसन्नवकमलवनादपि कथमित एव वलन्ते ।
मधुलिह एतमुपासितुमम्बुजमुखि वदनपरिमलं ते ॥ ४ ॥

लोकय कोकयुवा मदलोलमुपैति दराक्षिनिमीलम् ।
दयिततमामथ सा कृतचुंकृति चुम्बति तमपि सलीलम् ॥ ५ ॥

प्रियमनुगच्छति कच्छभुविस्थितमुन्मदमत्त मराली ।
विरचितचटुततिमदचलपटुगतिचंचुपुटात्तमृणाली ॥ ६ ॥

चटुलगलान्तरभृतकलहुङ्कृतिकलरवकुलमतिलोलम् ।
भ्रमति पुनःपुनरंचति चंचति विलसति रतिरसलोलम् ॥ ७ ॥

उपवनदर्शनतोऽनुनयन्निति किमपि रहस्त्रपमाणाम् ।
व्यासवरस्तुतशाहनृपोऽकलयत दयितां रममाणाम् ॥ ८ ॥

---

*अत्रान्तरे गगनचंक्रमणभ्रमेण
चण्डातपाहतिवशेन च संपिपासून् ।
अश्वान्निजान्किमिव पाययितुं विवस्वान्
वेगादगाहत तटं चरमाम्बुराशेः ॥

*एवं निवेद्य स वसन्तनवावतारं
सायन्तनानपि गुणानुपवर्णयिष्यन् ।
शोणीकृतं तरणिमेक्ष्य दिनान्तलक्ष्म्या
क्षोणीं पुरन्दरमणीरमणीमभाणीत् ॥

अहह कमलिनीविरहजदुःखमखहृयमिदं तु ममेति ।
पतितुमना इव वारिनिधौ रविरपरगिरेस्तटमेति ॥ १ ॥

बाले सरसमितो वरतनु वितर दृगंचलम् ॥ ध्रुवं ॥

तदिदमनीक्षितुमिव नलिनी सरसिजनयनानि पिधत्ते ।
अपि कमलोदरचरदलिमिषविषमिव वदने विनिधत्ते ॥ २ ॥

माननिमीलितमधिगम्य तमोऽहमुपयामि निशान्ते ।
रविरयमस्तकमस्तककृतकरमिति शपते किमु कान्ते ॥ ३ ॥

तिमिरनिकरमयनीलनिचोलमपि परिधाय नितान्तम् ।
सरभसमनुरागवती रजनिरिवाभिसरति निजकान्तम् ॥ ४ ॥

सान्ध्यरुचिज्वलनाम्बरकौतुकवेदिरुडुव्रजलाजा ।
राजतितामथ रजनिवधूमुपयन्तुमिवांचति राजा ॥ ५ ॥

कुवलयमोदविधायकमाननमनुपमकान्ति तवेति ।
व्रीडभरादिव जडवपुरिन्दुरयं किल मन्दमुदेति ॥ ६ ॥

विधुरनुबिम्बमिषेण कुमुद्वति कां कुपितां नमतीव ।
सा कुमुदोदरनिर्यदलिच्छलतो रूषमुत्सृजतीव ॥ ७ ॥

सितरुचिमण्डलमिदमपि कुण्डलितं मदनस्य शरासम् ।
अन्तरवेक्षित लक्ष्म नभःकृततारशरालिनिरासम् ॥ ८ ॥

तामिति पटुतरचाटुवचनैरनुनीय नितान्तविलग्नाम् ।
रमयितुमैहत धुण्डिनुतो विभुरालिकरांचललग्नाम् ॥ ९ ॥

॥ इति श्रीशाहविलासगीते नवोढाविस्रम्भो नाम
तृतीयः सर्गः ॥

## ॥ अथ चतुर्थः सर्गः ॥

*ततश्च –

किमपि रहसिकृत्यं साधु साख्योपदिष्टा
कथमपि रतिवेशमद्वारि मन्दं विसृष्टा ।
रमयति रमणीयं व्रीडगूढस्मरा सा
मनसिजरमणीयं शाहराजेन्द्रमेवम् ॥

हरिमेक रसं चिरमभिलपितविलासं
सा ददर्श गुरुहर्षवशंवदवदनमङ्ग विकासम् ।
इत्यस्यप्रतिनिधि

आलिपुकथमपि चिरमनुनीय गतासु शनैर्निजवाटम् ।
तिष्ठति सचकितमनिभृतवेपथु भृशमवलम्ब्य कवाटम् ॥ १ ॥

इति शाहनृपं रुचितनवरतिविहारम् ।
साऽनुरंजयति मुग्धतया भृशनिभृतमनोजविकारम् ॥ ध्रुवं ॥

प्रियतमहूति शतानि नताननमश्रुतवद्वितनोति ।
विधुतकरापि धृता वसने मुहुरान्तरमस्य धिनोति ॥ २ ॥

उपगमितापि शनैः शयनीयतले न निनीषदति बाला ।
दयितबलात्करणैरुपविश्य न संमुखमञ्चति लोला ॥ ३ ॥

आलापिता दयितेन मुहुर्मुहुरालपति न विनयेन ।
किंचन पुनरनुयुक्ततमा नृपमाह शिरश्चलनेन ॥ ४ ॥

छलशयिते दयिते मुखस्यति रूपयते कुतुकेन ।
सस्मितमुन्मिषिते मुषितेव निमीलति झटिति भयेन ॥ ५ ॥

क्षिपति चमत्कृतमवनिपतेरूपनीवि करं स्वकरेण ।
स्वयमुछ्वसितामथ तां कथमपि निरूणद्ध्युरूभरेण ॥ ६ ॥

अनखपदं कुचमर्शनमाननचुम्बनमनिहितदन्तम् ।
नाथित तमनुमत्य कथंचन कलयति किल समुदन्तम् ॥ ७ ॥

क्रमश इतीयमुदस्य तु साध्वसमविधुतं पतिकरसङ्गा ।
अनुमनुते ननु तेन यथाकृतमनुकूलमुदयदनङ्गा ॥ ८ ॥

शाहमहीपति बहुमतिमण्डित धुण्डिवचः परिपूतम् ।
पिबतु बुधावलिरधिकसुधातलमुदितसुधारसभूतम् ॥ ९ - १० ॥

---

*इति तयोरनिवारितवांछितं विहितनिर्दयदन्तनखव्रणम् ।
अलमिति छलगद्गदभाषितं रतमभूदुदयद्गलकूजितम् ॥

स्मरसमरवशेन व्यस्तविस्रस्त भूषा
स्वमपि रतिरहस्यं निन्हुवाना सखीभ्यः ।
उषसि रमणगेहादाशु निर्गन्तुकामा
न्यगददिति महीशं धार्ष्ट्यमालम्ब्य रामा ॥

**क्षनणमधुना नारायणं** इत्यस्य प्रतिनिधिः

नखरमुखैरपि दयितविचार्य विरचय चिकुरविनिवेशम् ।
रतिरमणसाहसमालिखैंति पुराहमुपैमि निवेशम् ॥ १ ॥

घटयविभो मे मण्डनं रतिरभसकृत विखण्डनम् ॥ ध्रुवम् ॥

कुक्कुटकुलमुपकूजति पटुतरमिह चरमरजनियामे ।
निटिलतटं नृप झटिति परिष्कुरु ललितललन्तिकयामे ॥ २ ॥

श्रवसि समर्पय मणिमयभूषणमपि च शिरीषवतंसम् ।
उरसि च हारमुदारमुपाहर तरलितमौक्तिकहंसम् ॥ ३ ॥

नयननलिनमनुरंजय मामकमंजनमपि विनिधाय ।
त्वदधरमिलितमिदं च मदंजनमपनय नर्मसहाय ॥ ४ ॥

मदधर सीमनि यावकमत्र निधेहि नृपाल सरागम् ।
क्षालय संप्रति भूरिकृपालय नयनपुटे तव रागम् ॥ ५ ॥

निर्दयमर्दन परिमृदितं मम पत्रकमत्र विधेहि ।
कुचयुगले रतिरभसकृतं नखमुखलक्ष्म पिधेहि ॥ ६ ॥

चरणतले मम सरसमलक्तकमुपनय रमणशयेन ।
तावकहृदि मम यावकपदमपि मार्जय निजसिचयेन ॥ ७ ॥

भूषय भूपतिवरमणिमुद्रिकया च मदङ्गुलिमूलम् ।
व्यासवरस्तुत काञ्चनकाञ्चिगुनेन बधान दुकूलम् ॥ ८ ॥

---

*इति कृतचटुयाचनां यथावत्कथमपिसैष विभूष्य भूषणैस्ताम् ।
पुनरपि मृदुचटुकाकुवाचिश्च तिकुतुकाददिशन्नतदुकूलम् ॥

रहसि रतिसहाये वाससिन्यस्तहस्ते सचकितमपयाता या पुरा लज्जितेव ।
पुनरपि निशान्ते सा वयस्येव तन्वीमभजत विरहार्तापत्रया मन्दमन्दम् ॥

मिथःसंश्लिष्टोरूस्थगितजपनापाणिपिहितस्तना-
भोगा लज्जासरिति किमुमंक्तुं नतमुखी ।
अवेत्य प्रत्यूषे चपलमपगन्तुं व्यवसिता
शनैरेवं काकुस्वरसरसमाहस्म नृपतिम् ॥

---

**समुदितमदने रमणविदने चुम्बनललिताधरे ।**
**रमते यमुना पुलिनवने** इत्यस्यप्रतिनिधिः

विगलति रजनी रतिसुखजननी कियदहह विलम्बसे ।
सस्मितवदनं वहिरालिजनं कथमिव न विशङ्कसे ॥ १ ॥

नृपते किमिदंपरिहसनं विसृजममाशु वसनं ॥ ध्रुवम् ॥

दिनमुख पवने विधुतऽपवने चरति शिशिरशीकरे ।
मधुकरपठलं विहरति चपलं, विकसितकमलाकरे ॥ २ ॥

क्षितिरुहशिखरे चटकानिकरे विरुवतिकलचुंकृतम् ।
कलयति चटुलं कलरवककुलं मुहुरपि गलहुंकृतम् ॥ ३ ॥

ध्वनिनाचरणायुधकुलमुरुणास्फुटतरमरुणोदयम् ।
कथयति हृदयं कुरुमयि यदयं तदवनिरमण स्वयम् ॥ ४ ॥

पृच्छति हि सखी दरहसितमुखी नृपवर यदि संप्रति ।
अतियति समये वत किमु कथये कथय कितवतां प्रति ॥ ५ ॥

गुरुजन इह मामपवदतितमामतिविहित वितम्बनाम् ।
वितनोषि मुधाकियदिह वसुधारमण मम विडम्बनाम् ॥ ६ ॥

चतुरचनचणो नृप बन्दिगणो वहिरपि तनुते नुतिम् ।
त्रपया विकला भृशमहमबला तवयदिविदधे नृतिम् ॥ ७ ॥

व्यासवरस्तुत गुणगणविश्रुत निखिलनृपतिनायक ।
प्रहसनमिह मा भवतु विसृज मामपहसितकुसुमसायक ॥ ८ ॥

तामिति लज्जाजलधौ भृशमवमग्नां पटांचले लग्नाम् ।
कथमपि गन्तुमनस्कामभिरन्तुमना नृपः प्राह ॥ ९ ॥

---

**वहति मलयसमीरे मदनमुपनिधाय ।**
**स्फुटति कुसुमनिकरे विरहिहृदयदलनाय ।**
**तवविरहेवनमाली सखि सीदति ॥** इत्यस्य प्रतिनिधिः

करयुगमुपरि कान्ते शिरसि पट्टु निधाय ।
प्रणम ललितहसिते व्रीडितमिदपहाय ॥ १ ॥

लघु वसनं विसृजेयं तव सुन्दरि ॥ ध्रुवम ॥

उपसर मदुपकंठं हृदयमुरसिजेन ।
घटय तदनुकण्ठं वलय भुजयुगेन ॥ २ ॥

सुदति कियदधरे ते रदनमुपदधामि ।
कृतललितविलसिते मधु तदिह पिबामि ॥ ३ ॥

दश दशनवसनं मे त्वमपि निजरदनेन ।
परिचितरतिनिगमे उपरि नटमदनेन ॥ ४ ॥

श्यासनुतनृप शाहे इति वदति सकामम् ।
सापि मनसिजमहेतुमकृत कृतकामम् ॥ ५ ॥

*अथ धरणिभुजा विसृष्टचेला कथमपि केलिगृहादपेत्य बाला ।
कृतनिभृतमिथःस्मितं सखीनां मुखमवलोक्य नितान्तलज्जिताभूत् ॥

मन्दाक्षमन्दां कथमप्यथैनामवेदयन्तीनिजनैशवृत्तम् ।
निर्बध्नती प्राणसमा वयस्या पुनः पुनः कापि समन्वयुङ्क्त ॥

न सखि मदुपक्लृप्तामण्डन श्रीरियं ते तनुरियमभिधत्ते श्रांतिमात्यन्ततर्कां ते ।
भवतु कियदिदानीं निह्नुपे मह्यमेतत्कथयरहसि वृत्तं तद्यथासंप्रवृत्तम् ॥

ततश्च

कामकेलिकलाविन्दु शाहेन्दुरतिचातुरीम् ।
लीलावती रहस्याह वयस्यामतिविस्मिता ॥

**कुरु यदुनन्दन चन्दनशिशिरेत्यस्य** प्रतिनिधिः

अयि दयिते मयि ते किमु संप्रति विप्रतिपत्तिरितीदृशम् ।
वदति चटुनि परिष्वजते लघुशाययति च शयने भृशम् ॥ १ ॥

सखि किं ब्रुवे रतिनैपुणं शाहविभोः सरसं गुणम् ॥ ध्रुवम् ॥

कुचयुगमुन्नतमर्हति ते शुभवृत्तमिदं न हि बन्धनम् ।
इति स विमुंचति कंचुकमाशु विलिम्पति वक्षसि चन्दनम् ॥ २ ॥

मनसिजमङ्गलकुंभमहं करवै नवकिंशुकमण्डितम् ।
इति कथयन्लघु कुचयुगलं मम रचयति नखमुखखण्डितम् ॥ ३ ॥

किमपि वदन्नुपकर्णमिवैष निधाय मुखं मम गल्लयोः ।
चुंबति चुंकृतिसरसमहो रभसोदितपुलकविफुल्लयोः ॥ ४ ॥

तव वदनांबुजसौरभमेव विलासिनि किंचिदुपाददे ।
चटुनिगदन्निति दन्तपदं मम हन्त ददाति रदच्छदे ॥ ५ ॥

कुचभरभोरुवलग्नमिहं तनु न क्षमते नहि बन्धनम् ॥
चतुरवचोभिरितीव विलोभ्य तनोति च नीविकलङ्घनम् ॥ ६ ॥

पदतलसंवहतानि शनैरिह तन्वि तनोमि सुखायते ।
सविनयमेवमुदीर्यबलादिव किमपि विधाय सुखायते ॥ ७ ॥

दरविकसन्नवमल्लिमतल्लिपरिमलमधुरसगंजनम् ।
मदयतु शाहदयारसमण्डितधुण्डिवचः सरसं जनम् ॥ ८ ॥

*क्रीडाद्रिकुंजकुहरेषु सरस्तटेषु रम्येषु हर्म्यशिखरेषु च तेषु तेषु ।
एवं तया दयितया सहमोदमानः कामं कृतार्थयति शाहविभुर्निकामम् ॥

॥ इति श्रीशाहराजविलासगीते रतिक्रीडा वर्णनं नाम
चतुर्थः सर्गः ॥

## ॥ अथ पञ्चमः सर्गः ॥

*अथ रहसि कदाचित्किंचिदागः स्वकीयं
सुदृशमसहमानां तादृगद्गाढमानाम् ।
कुसुमशरशरौघैर्निर्भरं तप्यमानाम्
सततमनुविचिन्त्य प्राह राजानुतप्तः ॥

**हरिरभिसरति वहति मधुपवने माधवे मा कुरुमानिनि मानमये**

इत्यस्य प्रतिनिधिः

किमपि विमनसि मयि निगदति रुषा
कुटिलमुदीक्ष्य तदाजनिपरुषा ॥ १ ॥

हा कथं संप्रति मां प्रति सा वलते ॥ ध्रुवम् ॥

सपदि मया पुनरनुनयवचसा कृतमपि सान्त्वनममनुत न च सा ॥ २ ॥

भृशमवसीदति किसलयशयने बत पतितेव च मनसिजदहने ॥ ३ ॥

क्लिश्यति शुष्यति रोदिति विवशा विलपति मुह्यति मम विरहकृशा ॥ ४ ॥

सा दयिता यदि मयिभृशकुपिता मम विफलाखिल नरपति विभुता ॥ ५ ॥

सा न शृणोति च हितजनवचनं बत विदधेकथमिदमनुनयनम् ॥ ६ ॥

अहमुपयामि कृतानतिरपि तां चिरमनुनीयदधे हृदि ललिताम् ॥ ७॥

लक्ष्मण नन्दनवागिव सुकलासैव ममार्हति बहुमतिमबला ॥ ८ ॥



*स्वकृतापराधकुपितां चिरमिति हृदि तां विचिन्तयन्दयिताम् ।
शाहनृपः स्ववयस्यं किमपि रहस्यं पुनः प्राह ॥

**कथितसमये भिहरिरहह नय यौवनं यामि हे कीमह शरणं**
**सखीजनवचनवंचिताहम्** इत्यस्य प्रतिनिधिः ।

रहसि विहरन्त्यपि सरसमहहना मया
किमपिवदतान्यदळमजनि विमना मया ॥ १ ॥

हा कथं नु मम दयते प्रियामदपनयकोपि तासाम् ॥ ध्रुवम् ॥

यदनुनयनाय कियदहहयतितं तथा
तदपिनिखिलं सखे सपदिजनितं वृथा ॥ २ ॥

मलयमरुदावहति भयमतितरामयं
विधुरपि तनोति बत मनसि विरहामयम् ॥ ३ ॥

तुदति कुसुमाशुगैरतनुरपि चिन्तय-
न्दिशि दिशि विलोकये जगदपि च तन्मयम् ॥ ४ ॥

नियतमबलाकरे कलयति दुरन्तया
मुखमपि विभातविधुविधुररुचिचिन्तया ॥ ५ ॥

सततमपि तद्वदनसित किरणचुम्बितं
स्फुटति बत हृदयकमलभरतिकरम्बितम् ॥ ६ ॥

अथ कथमसौ भजति मयि हृदयरंजनं
सरसमवलोकयेदपि सकृदिमं जनम् ॥ ७ ॥

नृपतिवर शाहविभुवचनमिदमीदृशं
जयतु भुवि धुण्डिबुधवरविरचितं भृशम् ॥ ८ ॥

॥ इति श्रीशाहविलासगीते अनुनयविचारो नाम
पञ्चमः सर्गः ॥



## ॥ अथ षष्ठः सर्गः ॥

*विषादमननीयांसं रमणीविषयं वहन् ।
एणीदृशमिमामेत्य क्षोणीपतिरभाषत ॥

सुतनु वितनु मयि नयनविलासम् ।
वदनकमलमपि कुरुसविकासम् ॥ १ ॥

मानिनि प्रिये भामिनि रूषमुत्सृज ॥ ध्रुवम् ॥

अयिमयि मुंच दृगंचलमेकम् ।
विकसतु दिशि दिशि नलिनमनेकम् ॥ २ ॥

कियदहरहह सहेऽहमसह्यम् ।
मधुरमधरमधु लघु दिशमह्यम् ॥ ३ ॥

सुदति वितुदतिवितनुरपिमर्म ।
मयि दिश भृशपरिरम्भणवर्म ॥ ४ ॥

भ्रुवि मदनधनुषि सृजसिच भंगं ।
स च बतनुदतीषुभिरिदमङ्गम् ॥ ५ ॥

जातु न कलयाम्यविनलेशं ।
दिश निजकुचसंवहननिदेशम ॥ ६ ॥

न दिशसि यदि मयिकुरवकभावम् ।
कुरु तदशोकद्रुमवद्भावम् ॥ ७ ॥

व्यासवरेरितमिदमविगीतम् ।
सुखयतु शाहनृपं शुभगीतवम् ॥ ८ ॥



*इति समनुनयन्तं चाटुवाक्यैर्नृपं तं
कथमपि मदिराक्षी वीक्ष्य रूक्षैः कटाक्षैः ।
किमपि विवलितास्यं बाष्पमुद्वेलमक्ष्णो-
र्विपुलपुटनिरूद्धं सा नखैःपर्यमार्क्षीत् ॥

इतीव भूपानुनयं प्रति क्रुधा
पराङ्मुखीं चन्द्रमुखीमुदीक्ष्यताम् ।
शनैरुपालम्भपुरस्सरं वचः
सखी रुषा प्रेमजुषा तदागदीत् ॥

**मुग्धे मधुमथन अनुमतमनुसरराधिके** इत्यस्य प्रतिनिधिः

सुमुखि जनाधिपमिहं चरणानतमपि किमु नावदधासि ।
न हि तमवेषि वचो न शृणोषि च बत किमिदंविदधासि ॥ १ ॥

मुग्धे शाहनृपतिमनुगतमनुनय संप्रति ॥ ध्रुवम् ॥

क्षितिपतिमौलिलसच्चरणो यदि सैष तनोति नमस्ते ।
युवतिगणैरपि मृग्यतमं बहुभाग्यमिदं तु तवास्ते ॥ २ ॥

अपि यदपाङ्गलवाय समस्तमहीपतयः स्पृहयन्ते ।
सोऽपि समंचतु चंचलतारदृगंचलमेतदयं ते ॥ ३ ॥

यस्य च शासनमानमिताखिलपार्थिवमस्तकपालि ।
स तु तव तन्वि दधातुतमामधिमौलि निदेशनमालि ॥ ४ ॥

जगदधिराज्यरमाधिनिवासनसुरभि भुजान्तरमस्य ।
घनपृथुलस्तनतटघटितं प्रविधेहि विषादमुदस्य ॥ ५ ॥

सुदृढमुरस्तटमेव विशङ्कटमिदमवनि परिबृढस्य ।
परिचरणक्षममस्य घटस्तनकुचयुगलस्य दृढस्य ॥ ६ ॥

परिहर जाड्यमिदं प्रमदाढ्यमुदारमुपास्व नरेशम् ।
रतिगुरुरयमपि पंचशरोपनिषदि तनुतामुपदेशम् ॥ ७ ॥

इति हि सखीवचसा सहसा परिमुच्य विषादममानम् ।
धुण्डिनुतं नृपशाहमुदैक्षत सस्मितमुज्झतमानम् ॥ ८ ॥

*तामित्थं कथमपि सुन्दरीं वयस्या
सामोह्या व्यधित नृपोत्तमः प्रसन्नाम् ।
तत्कालद्विगुणितशर्मवर्मिताभिः
क्रीडाभिः सरसमरीरमच्च सा तम् ॥

॥ इति श्रीशाहविलासगीते प्रियानुनयनाम
षष्ठः सर्गः ॥

## ॥ अथ सप्तमः सर्गः ॥

*श्रीशालिमालिवचसा क्वचिदाप्रभातं
जातु प्रतीक्ष्यनिजवंचनखिन्नचित्ता ।
तेनान्यया दयितया सहभुक्तमुक्तं
साशंसमेत्य रतितल्पमजल्पदेषा ॥

नवरतलज्जितसचकितयाना ।
पुलिने विषमपदानि दधाना ॥ १ ॥

कापि सुकृतवती मम रमणमिह रमितवती ॥ ध्रुवम् ॥

दयिततमेन धृतापि विहस्ता ।
लुलितलतासु विषंजितहस्ता ॥ २ ॥

करयुगकलितस्वस्तिकवलया ।
प्रियपरिरम्भणविदलितवलया ॥ ३ ॥

विषमविलोडितकिसलयतल्पा ।
विरचितबहुविधसुरतविकल्पा ॥ ४ ॥

कुचयुगमुद्रितमृदुशयनीया ।
निध्रुवनभेदकला कमनीया ॥ ५ ॥

पदतलयावकरंजितशयना ।
कृतपुरुषायितरतिरसकलना ॥ ६ ॥

अनुमतनृपकृतविविधविहारा ।
विगलितभूषणगणमणि हारा ॥ ७ ॥

व्यासकुलार्णवसितरुचिरचितम् ।
पठतवचनमिति यदि हृदि रुचितम् ॥ ८ ॥

---

*ईर्ष्याकषायितमना विमना सपत्नीं ।
श्री शाहजिक्षितिवरेण चिरेण भुक्ताम् ।
आशङ्क्य सैव रमणी रमणीयमूर्तिः
प्रातर्विधूपममुखी स्वसखीमभाणीत् ॥

शाहमहीरमणेन या सखि सह विहरति ।
रुचिततरेण सैव मता भुवि भाग्यभरेण ॥ ध्रुवम् ॥

स चकितगतिरपि रतिनिपुणेन ।
शमितभया पटुचटुवचनेन ॥ १ ॥

शयनगता करधृतचिकुरेण
सरभसचुंबितवलदधरेण ॥ २ ॥

नखमुखविलिखितकुचकलशेन ।
झटिति विघटितकटिसिचयेन ॥ ३ ॥

अलमिति गद्गदकलभणितेन ।
उपचितरतिरतिमृदुमणितेन ॥ ४ ॥

झणझणसिंजितमणिरशनेन
उपरि नटत्यथ घनजघनेन ॥ ५ ॥

अभिहितसाधुवचननिकरेण ।
श्रमजलमार्जनचतुरकरेण ॥ ६ ॥

मुकुलितलोचनमुदितरसेन ।
परिपतितोरसि रतिरभसेन ॥ ७ ॥

कलित पुलकघनकुचयुगलेन ।
मृदुवशखण्डितरदवसनेन ॥ ८ ॥

व्यासवरतुत गुणनिचयेन ।
सकलकलाकृत सुपरिचयेन ॥ ९ ॥



*वंचितां रतिसंकेते नृपः प्रेमरुषाञ्चिताम् ।
कान्तां सान्त्वयितुं मन्दं मन्दमागात्तदन्तिकम् ॥

शाहं कयाचित्समित्रपुंजे
विहृत्य साकं सहकारकुंजे ।:
सव्रीडहासं निजसान्त्वनाय
प्रातस्समायातमभाषतैषा ॥

याहि तामनुयाहि तां नृप नाहितं वितनोमि ।
मा वृथा विनयं कृथा नरनाथ तेन दुनोमि ॥ १ ॥

हर हर नरेश भवता वंचितास्मिमुधैव ॥ ध्रुवम् ॥

प्रेम तद्गतमेव ते मम हेम केवलमेव ।
हंत यच्छसि हन्तुमिच्छसि मन्तुमेव नृदेव ॥ २ ॥

किं विधायमुधानतिं निस्मृतिं विभो विदधासि ।
वक्षसीह विलक्ष किंनु नखक्षते पिदधासि ॥ ३ ॥

प्रेयसीकुचकुङ्कुमं कितवोरसीह विभाति ।
प्रेम तद्बहिरुद्गतं किमु यन्नते हृदि माति ॥ ४ ॥

तावकं निटिलं लसत्पदयावकं विमृशामि ।
सान्ध्यरागविराजितं विधुमुद्गतं किलसामि ॥ ५ ॥

दन्तवाससि हा कृतागसि कज्जलं विवृणोषि ।
मद्गतं कुटिलं कलङ्कमिवाविरद्य करोषि ॥ ६ ॥

नानुवृत्तिरपेक्षिताहमुपेक्षिता बत येन ।
गच्छ संप्रति न छलं वद किं मृषा विनयेन ॥ ७ ॥

व्यासवंशजमौक्तिकोदितमाहिमाचलसेतु ।
शाहवंचितममानिनीवचनं बुधश्रुतिमेतु ॥ ८ ॥

*चटुवदन्विव नमन्नपि भूपतिः
दयितया स तयेति निराकृतः ।
अतितरामनुतापमपन्नयं
प्रियसखीमनुनेतुमयोजयत् ॥

**॥ इति श्रीशाहविलासगीते खण्डितावचनं नाम सप्तमः सर्गः ॥**



## ॥ अथ अष्टमः सर्गः ॥

*तामथ मन्मथतप्तां भृशमनुतप्तां लतागृहे सुप्ताम् ।
शालनृपालनियुक्ता प्रियहितसूक्ता सखी प्राह ॥

### निभृतनिकुंजगृहंगतयेत्यस्य प्रतिनिधिः

अभिनवयौवनमुज्वलसाधनमिदमतियाति वृथा ते ।
क्लिन्नकुचौ तव कन्दुकविभ्रममुरसि नृपस्य दधाते ॥ १ ॥

किमये चेतसि वहसि खेदं ।
शृणु सखि संप्रति तं प्रति संतनु ।
मानिनि मा मति भेदम् ॥ ध्रुवम् ॥

पिशुनवचो हृदि मा कुरु कामिनि भावय कामिनि कामम् ।
त्वयि सरसं नृपमानसमुत्सृज मानमिमं भृशवामम् ॥ २ ॥

त्वदनुविचिन्तन-रसवशसंभृतमनु तनुपुलककदम्बम् ।
स वहति हृच्छयमुक्तशरोत्करबहिरितशल्यविडम्बम् ॥ ३ ॥

मलयसमीरमुपाहृतपंकजपरिमलमेष सकामम् ।
तव वदनाम्बुजसौरभलोभवशादुषसि प्रतिकामम् ॥ ४ ॥

विरहिजनेक्षणदुःसहमध्यमतिमृदुपल्लवजालम् ।
बत परिपश्यति विधुमुखि कोमलतरभवदङ्घ्रिधियालम् ॥ ५ ॥

मदकलकलरवकोमलकूजितमनुकलमेषशृणोति ।
तव मणितस्मृतिसंभवसात्विक भावमथो विवृणोति ॥ ६ ॥

सखि चल वंजुलकुंजगृहं रतिमण्डनमाशु विधेहि ।
न खलु विसोढुमलं स विलम्बमिति हृदि तत्वमवेहि ॥ ७ ॥

शाहमहीपतिबोधितदूतिसुभाषितमेतदुदारम् ।
जनयतु लक्ष्मणनन्दनवर्णितमिति बुधमोदमपारम् ॥ ८ ॥



ततश्च

*सहचरी सुदृशं (सदयं) बहुसान्त्वनै-
रपिविषादभरं न विमुंचतीम् ।
किमपि भेदयितुं रमणीगणैः
क्वचन तं विहरन्तमदर्शयत् ॥

**नाथ हरे जगन्नाथ हरे** इत्यस्य प्रतिनिधिः

युवतिगणैरिह सह निवसन्तं ।
ललितलतातितिभिरिव वसन्तम् ॥ १ ॥

शाहनृपं भज भूरिकृपं ।
सीदसि मुग्धे किंनु मुधा ॥ ध्रुवम् ॥

कामपि सरसमुदीक्ष्येह सन्तं ।
रुचिररदनशुचिरूचिविलसन्तम् ॥ २ ॥

सह च कयाचन कृतपरिहासं ।
विचरति रतिपरवचनविलासम् ॥ ३ ॥

कुहचन किंचन सुदृशिमुदारं ।
प्रेमदशां कलयन्तमुदारम् ॥ ४ ॥

पश्य कयाचन हृतकुचचेलं ।
करधृतसरसिजहतमनुवेलम् ॥ ५ ॥

अपि च कयाचन कृतपरिरम्भं ।
दृढतरपीडित पृथुकुचकुम्भम् ॥ ६ ॥

विघटितनीविकया च सरोषं ।
विकटविलोकनकृतपरितोषम् ॥ ७ ॥

व्यासवरस्तुतललितविशेषं ।
स्मर सुकुमारमनोहरवेषम् ॥ ८ ॥



*कान्तां मानभराक्रान्तां तान्तां विरहवह्निना ।
कलहान्तरितां तां तां वाचमाह पुनःसखी ॥

शाहजि भूपे निरूपमरूपे कुरु सखि भावमुदारम् ।
किमिति विषीदसि परिहरचेतसि चिरधृतमानविकारम् ॥ ध्रुवम् ॥

सपदि वसन्तोदयविकसन्तो विरहिणमखिलमशोकाः ।
विदधति दूनं सुमुखि तदूनं कुरु हृदि कोपमशोका ॥ १ ॥

मलयसमीरं मनसिजवीरो विचरति हन्त निकामम् ।
अमुमविषह्यं कथयसि मह्यं त्यजसि हठं न च वामम् ॥ २ ॥

त्यजति समस्तः रुचिरियमस्ताचलशिखरं गतमर्कम् ।
प्रियमभिसर तं त्वयि चिरनिरतं भज शुभमेन मुदर्कम् ॥ ३ ॥

व्रज च(नु) सलीलं प्रियसखि नीलं वसनमिदं परिधेहि ।
छादय वलयं कृततिमिरलयं तमसि सरणिमवधेहि ॥ ४ ॥

सखि सविलासं कृतपरिहासं विविनु निकुंजनिलीनम् ।
तदनु विदं भाकृतपरिरम्भा रचय नृपं रसलीनम् ॥ ५ ॥

नखमुखविक्षोभित घनवक्षो रुहमधरीकुरुबाले ।
प्रियमथ जघनं परिहृतवसनं नटयमुहुः शुभभाले ॥ ६ ॥

जितकुलशैलौ रभसविलोलौ वहति कुचौ स शयेन ।
कृशमवलग्नं भृशभरभग्नं भवति पुरेति भयेन ॥ ७ ॥

आह नु सलिलं मृगमदकलिलं भ्रमजमुदीक्ष्य कपोले ।
पुरुषविलासोचितमिति हासो भवतु नृपे रसलोले ॥ ८ ॥

वरसिच तेन स्फुटपुलकेव प्रसभधृतावतिनेत्रा ।
विलसरतान्ताधिकतरतान्ता दरमुकुलीकृतनेत्रा ॥ ९ ॥

व्यासवरेरितमिदवधीरित सुरललनाधरपानम् ।
शृणु जयदेवोदितशुभभावोज्ज्वलरसकूपनिपातम् ॥ १० ॥

*सरसमधुरैर्दूतीवाक्यैः कृतानुनया दर-
स्मितरुचिलसदंगदाभोगस्फुरत्पुलकांकुरा ।
उपवनरहःकुंजे तज्ज्ञे शितारमुपेत्यसा
भृशमरमत प्रेमोद्दामकमैरतिविभ्रमैः ॥

साकं जातुवयस्यया मृदुरणन्मंजीरमंजुस्वना-
हूता मत्तमरालिका कलकलैरुद्भिन्नकांचीरवा ।
लीलावारिरुहानिवारितमुखामोद भ्रमत्षड्पदा
लीलासौधमगादुदीक्षितुमना लीलावती भूमिपम् ॥

हैमस्तम्भविराजदुज्ज्वलवितानोल्लम्बिमुक्तावली-
प्रालम्बे मणिमण्डपे नतशिरस्सामन्तसंसेवितम् ।
रत्नोद्भासितदंतिदन्तसदनासीनं नृपं सस्पृहं
पश्यन्ती मणिरम्यहर्म्यवसतिः सैषा सखीमालपत् ॥

---

अधिमणिमण्डपमुज्ज्वलहीरकपदकविराजितहारे ।
अंगदसङ्गिमसाररुगंचितहैम पटांशुविसारे ॥ १ ॥

भृशमिह शाहमहीरमणे । रमे सखि सकलकलानिपुणे ॥ ध्रुवम् ॥

मौलिलसन्मणिपट्टकलंबितमौक्तिकगुच्छमनोज्ञे ।
मण्डतलोज्ज्वलकुण्डलदीधितिशालिनि केलिरसज्ञे ॥ २ ॥

यौवनपुण्यविपाकवशोदित भव्यतनात्रिवकामे ।
रतिसुखदायिनि मानसमोहनकृति नितरामभिरामे ॥ ३ ॥

जातु निजैः सचिवैः सह भाषिणि जातु च गीतिषु लोले ।
जातु च रेचितमंजुतरभ्रुवि काव्यरसाहित लीले ॥ ४ ॥

भ्रूयुगमध्यगतिस्तुलनिस्तुलमृगमदमस्य विशाले ।
कामशरासनधृतगुलिकानिभमाकलये किल भाले ॥ ५ ॥

स्फुरद्रुमरत्नमयांगुलिभूषणगणकिरणावलिसूनम् ।
करयुगमेतदुपैति सुरद्रुमपल्लवभावमतूनम् ॥ ६ ॥

अयि हितकामिनि कामिनि कामिनितान्तमनङ्गशरौघैः ।
कंपति संप्रति संप्रतिभिन्नमिदं मम चित्तममोघैः ॥ ७ ॥

चोलमहीसुरनेतरि जेतरि दिल्लिपतेरतिकान्ते ।
प्रेम निवेदय धुण्डिमनीषितदातरि भूरतिकान्ते ॥ ८ ॥

---

*इति प्रीतिस्फायन्नयनमनुवीक्ष्य स्मरशर
प्रकारैरुद्दण्डैरिव पुलकहर्षैरुपचिता ।
रहः सख्या तस्मिन्निभृतमुपनीते नरपता
वियं गाढप्रेमा किमपि निरविक्षद्रतिसुखम् ॥

## ॥ प्रार्थना ॥

धर्मार्थावनुपालयन्निति यथाकालं तया कान्तया
कामं साधु कृतार्थयन्विहरतां शाहक्षमावल्लभः ।
ध्वस्ताराति वशीकरोतु जगतीमासेनुशैवाचलं
सत्सन्तानमुपैतु जीवतु निराबाधः शतं वत्सरान् ॥

जय जय गोपवधूजनलोल विलोकय शाहजिलोकविभुम् ।
निजपद सेवन तत्पर सज्जन पापविभंजन कृष्ण हरे

## ॥ मत्स्य ॥

श्रुतिहरणोद्धर शंखविशृंखलदंभविडम्बनमीनतनो ।
दृढतरपुच्छपराहतवारिधिवारिविमिश्रितदिव्यधुने ॥ १ ॥

## ॥ कूर्म ॥

मथनविदीर्णरसातल मन्दर भूधर धारणकारणतः ।
जगदभिवादितमाहितकच्छपरूपमरूप रमेश भवान् ॥ २ ॥

## ॥ वराह ॥

प्रलयसमुद्धलदंबुधिमग्न धरोद्धरणाहितकोलतनो ।
प्रथुतरघोणपराहतकौणपराज यदूत्तम पालय भोः ॥ ३ ॥

## ॥ नृसिंह ॥

भवदरिमेवमिवेह शृणोमि भयं सृजेति भजन्तमित्र ।
कथयितुमाशुविदारितदारुच किंचनवस्तु मुहुस्स्तुमहे ॥ ४ ॥

## ॥ वामन ॥

लघुतरतामुपयाति नरः खलु याचक ईदृशमित्थमिव ।
अयि बलियाचनतः कृतवामनविग्रहवक्षि जनस्य हरे ॥ ५ ॥

## ॥ परशु राम ॥

भुजजहृदन्तर रन्ध्रनिरन्तर निर्यदसृग्भरक्लृप्तनदे ।
कृतपितृतर्पण भूमिसमर्पण लब्धसमर्हण राम जय ॥ ६ ॥

## ॥ राम ॥

भुवनविरावण रावणमारणहेतुधृतारुणवंशजनिम् ।
दशरथनन्दन मानभवन्दनकुज्जननन्दन भूमिरुहम् ॥ ७ ॥

## ॥ बलराम ॥

दृशि मदपाटलमासवगन्धि मुखोपि च मेचककान्तिपटे ।
भुजशिखरे कृतलाङ्गलमाश्रय मङ्गलदंबलभेदि महः ॥ ८ ॥

## ॥ कृष्ण ॥

अधराहितमंञ्जुवेणुमूलं घननीलं व्रजबालिका विलोलम् ।
अलकावलि भासमानाभालं कलये चेतसि नन्दगोपबालम् ॥ ९ ॥

## ॥ कल्कि ॥

अधिकलि जैनजनैकनिषेव्यमनम्बरमंबरवासि विभो ।
श्रुतिगणहेयमगेयगुणं बहुमायममेयं बिभर्षि वपुः ॥ १० ॥

घनख भीषणहेषणमुद्धतधूलितिरोहितहेलिरुचिम् ।
हयमधिरुह्यहरिं तर वारिनिवारितवैरततिं कलये ॥ ११ ॥

जगदवनाय विनाशयसीत्थमनन्तगुणांतनुमाकलयन् ।
असुरनिकायमकाय धरोऽपि कृपालय पालय शाहविभुम् ॥ १२ ॥

भगवदुपासन दक्षिण लक्ष्मणदीक्षितवर्यतनूजनुषा ।
हरिदशरूपनिरूपणमेव मुदाहृतमस्तु मुदे सुहृदाम् ॥ १३ ॥

---

*यस्मिन्ननन्ताः श्रुतयोऽपि मूकाः खंजाभियोगीन्द्रमनांसियात्राम् ।
तं ते समस्तं महिमातिरेकं स्तोतुं प्रभुःस्यां कथमब्जनाभ ॥

वियत्कज्जलैर्यस्य नीलंप्रतीमो भजन्ति द्विषःशालभीं यत्रवृत्तिम् ।
प्रतापप्रदीपेन दिग्योषितस्त्वां त्वदीयेन शाहेन्द्र नीराजयन्ति ॥

श्री 7

मंगलं भुवनावनावहितशुभमते मंगलं परमस्तु शाहनृपते ॥ ध्रुवम् ॥

तारमन्दारहरसुरगजवियन्नदीहारकुन्देन्दुनिभकीर्तिवितते ।
कन्दर्पनिभरूप मन्दरोपमधृते मानिताखिलकविमनोहरकृते ॥ १ ॥

संततोदितसततसन्तापितारि भुजतेजसा परिभूतवासरकृते ।
चिन्तितामितवस्तुदानेन सन्तोषिताशेष भुविबुधाय दुष्कृतिहृते ॥ २ ॥

जीव शरदः शतमविरतं प्रमोदस्व भूतलमिदं साधुशश्वदखिलम् ।
पालयधरापाल लालय सुतानीश शीलय यशःक्षीरहीरधवलम् ॥ ३ ॥

भोसलकुलाम्बुनिधिभवदमृतदीधिते दीपांबिकान्वयसुदीपभवते ।
पण्डितजनाधारधुण्डिवुधकृतनुते स्वस्तिसततमस्तु तत्र भवते ॥ ४ ॥



*शाहोर्वीन्दोस्सरसकरुणालोकपीयूषसिक्ता-
वालादस्मादजनिकवितानाम या कल्पवल्ली ।
तत्ताद्दक्तत्सुरभिलयशस्सूनहृद्यानवद्या
सा मे भूयादुदयदुदयत्तत्प्रसादैःफलाढ्या ॥

बुधो धुण्डिर्नाम्ना जगति विदितो लक्ष्मणसुधी-

मणेः श्रीमद्व्यासान्वयजलधिचन्द्रादजनि यः ।

शुभः शश्वद्विश्वप्रथितयशसः शाहनृपतेर्विलास-

स्तेनायं सरसमुपगीतो विजयते ॥

॥ इति श्रीधुण्डिव्यासविरचिते शाहविलासगीते

अष्टमः सर्गः ॥

॥ इति श्रीशाहमहाराज पौरणिक धुण्डिव्यासविरचितं

शाहविलासगीतं ॥

## ॥ श्रीशाहविलासगीतं समाप्तम् ॥

## ॥ विजयताम् ॥

॥ शुभमस्तु ॥



卐 卐

## AN APPEAL

Manuscripts on Palm Leaf or Paper of the ancient works of the wise men of the past, are the great treasures, solely inherited by the Nation, and it is the moral obligation of persons who possess them to preserve them safely for the future generations of mankind.

Probably you have some of these in your possession or you know friends or neighbours who possess them. You can make a great contribution to the cause of the preservation not only of our National Culture but also of the Culture of Humanity as a whole by arranging to present such manuscripts to the famous T. M. S. S. M. Library, Thanjavur.

The manuscripts so presented will be accepted and acknowleged with pleasure and gratitude by the authorities of the Library, preserved with meticulous care and made available to successive generations of readers and scholars for study and research. The hitherto unpublished works found among them, will be printed and published in due course, as facilities occur, with the expression of the Library's gratitude for your gift.

The great Scholar-King of Tanjore, Rajah Serfoji, has attained immortal fame by dedicating enormous time and wealth to the expansion and firm establishment of this world-famous 'Sarasvati Mahal Library'. It is open to you to share the honour of Serfoji, in your own measure, by contributing your manuscripts to the great institution built by him.

This great Honour is beckoning to you to accept it, will you hasten to take it up?. The Library waits for your answer.

Collector & Director,
T.M.S.S.M. Library, Thanjavur.

卐 卐

